अमृतसञ्जीवन धन्वन्तरिस्तोत्रम् १

नमो नमो विश्वविभावनाय
नमो नमो लोकसुखप्रदाय ।
नमो नमो विश्वसृजेश्वराय
नमो नमो नमो मुक्तिवरप्रदाय ॥ १॥

नमो नमस्तेऽखिललोकपाय
नमो नमस्तेऽखिलकामदाय ।
नमो नमस्तेऽखिलकारणाय
नमो नमस्तेऽखिलरक्षकाय ॥ २॥

नमो नमस्ते सकलार्त्रिहर्त्रे
नमो नमस्ते विरुजः प्रकर्त्रे ।
नमो नमस्तेऽखिलविश्वधर्त्रे
नमो नमस्तेऽखिललोकभर्त्रे ॥ ३॥

सृष्टं देव चराचरं जगदिदं ब्रह्मस्वरूपेण ते
सर्वं तत्परिपाल्यते जगदिदं विष्णुस्वरूपेण ते ।
विश्वं संह्रियते तदेव निखिलं रुद्रस्वरूपेण ते
संसिच्यामृतशीकरैर्हर महारिष्टं चिरं जीवय ॥ ४॥

यो धन्वन्तरिसंज्ञया निगदितः क्षीराब्धितो निःसृतो
हस्ताभ्यां जनजीवनाय कलशं पीयूषपूर्णं दधत् ।
आयुर्वेदमरीरचज्जनरुजां नाशाय स त्वं मुदा
संसिच्यामृतशीकरैर्हर महारिष्टं चिरं जीवय ॥ ५॥

स्त्रीरूपं वरभूषणाम्बरधरं त्रैलोक्यसंमोहनं
कृत्वा पाययति स्म यः सुरगणान्पीयूषमत्युत्तमम् ।
चक्रे दैत्यगणान् सुधाविरहितान् संमोह्य स त्वं मुदा
संसिच्यामृतशीकरैर्हर महारिष्टं चिरं जीवय ॥ ६॥

चाक्षुषोदधिसम्प्लाव भूवेदप झषाकृते ।
सिञ्च सिञ्चामृतकणैः चिरं जीवय जीवय ॥ ७॥

पृष्ठमन्दरनिर्घूर्णनिद्राक्ष कमठाकृते ।
सिञ्च सिञ्चामृतकणैः चिरं जीवय जीवय ॥ ८॥

धरोद्धार हिरण्याक्षघात क्रोडाकृते प्रभो ।
सिञ्च सिञ्चामृतकणैः चिरं जीवय जीवय ॥ ९॥

भक्तत्रासविनाशात्तचण्डत्व नृहरे विभो ।
सिञ्च सिञ्चामृतकणैः चिरं जीवय जीवय ॥ १०॥

याञ्चाच्छलबलित्रासमुक्तनिर्जर वामन ।
सिञ्च सिञ्चामृतकणैः चिरं जीवय जीवय ॥ ११ ॥
क्षत्रियारण्यसञ्छेदकुठारकररैणुक ।
सिञ्च सिञ्चामृतकणैः चिरं जीवय जीवय ॥ १२॥

रक्षोराजप्रतापाब्धिशोषणाशुग राघव ।
सिञ्च सिञ्चामृतकणैः चिरं जीवय जीवय ॥ १३॥

भूभरासुरसन्दोहकालाग्ने रुक्मिणीपते ।
सिञ्च सिञ्चामृतकणैः चिरं जीवय जीवय ॥ १४॥

वेदमार्गरतानर्हविभ्रान्त्यै बुद्धरूपधृक् ।
सिञ्च सिञ्चामृतकणैः चिरं जीवय जीवय ॥ १५॥

कलिवर्णाश्रमास्पष्टधर्मर्द्ध्यै कल्किरूपभाक् ।
सिञ्च सिञ्चामृतकणैः चिरं जीवय जीवय ॥ १६॥

असाध्याः कष्टसाध्या ये महारोगा भयङ्कराः ।
छिन्धि तानाशु चक्रेण चिरं जीवय जीवय ॥ १७ ॥

अल्पमृत्युं चापमृत्युं महोत्पातानुपद्रवान् ।
भिन्धि भिन्धि गदाघातैः चिरं जीवय जीवय ॥ १८ ॥

अहं न जाने किमपि त्वदन्यत्
समाश्रये नाथ पदाम्बुजं ते ।
कुरुष्व तद्यन्मनसीप्सितं ते
सुकर्मणा केन समक्षमीयाम् ॥ १९ ॥

त्वमेव तातो जननी त्वमेव
त्वमेव नाथश्च त्वमेव बन्धुः ।
विद्याहिनागारकुलं त्वमेव
त्वमेव सर्वं मम देवदेव ॥ २०॥

न मेऽपराधं प्रविलोकय प्रभोऽ-
पराधसिन्धोश्च दयानिधिस्त्वम् ।
तातेन दुष्टोऽपि सुतः सुरक्ष्यते
दयालुता तेऽवतु सर्वदाऽस्मान् ॥ २१॥

अहह विस्मर नाथ न मां सदा
करुणया निजया परिपूरितः ।
भुवि भवान् यदि मे न हि रक्षकः
कथमहो मम जीवनमत्र वै ॥ २२॥

दह दह कृपया त्वं व्याधिजालं विशालं
हर हर करवालं चाल्पमृत्योः करालम् ।
निजजनपरिपालं त्वां भजे भावयालं
कुरु कुरु बहुकालं जीवितं मे सदाऽलम् ॥ २३॥

क्लीं श्रीं क्लीं श्रीं नमो भगवते
जनार्दनाय सकलदुरितानि नाशय नाशय ।
क्ष्रौं आरोग्यं कुरु कुरु । ह्रीं दीर्घमायुर्देहि स्वाहा ॥ २४॥

॥ फलश्रुतिः॥

अस्य धारणतो जापादल्पमृत्युः प्रशाम्यति ।
गर्भरक्षाकरं स्त्रीणां बालानां जीवनं परम् ॥ २५॥

सर्वे रोगाः प्रशाम्यन्ति सर्वा बाधा प्रशाम्यति ।
कुदृष्टिजं भयं नश्येत् तथा प्रेतादिजं भयम् ॥ २६॥

॥ इति सुदर्शनसंहितोक्तं अमृतसञ्जीवन धन्वन्तरि स्तोत्रम् ॥

॥ धन्वन्तरिस्तोत्रम् ॥

ॐ नमो भगवते धन्वन्तरये अमृतकलशहस्ताय,
सर्वामयविनाशनाय, त्रैलोक्यनाथाय श्रीमहाविष्णवे नमः ॥

चन्द्रौघकान्तिममृतोरुकरैर्जगन्ति
सञ्जीवयन्तममितात्मसुखं परेशम् ।
ज्ञानं सुधाकलशमेव च सन्दधानं
शीतांशुमण्डलगतं स्मरतात्मसंस्थम् ॥

मूर्ध्नि स्थितादमुत एव सुधां स्रवन्तीं
भ्रूमध्यगाच्च तत एव च तानुसंस्थात् ।
हार्दाच्च नाभिसदनादधरस्थिताच्च
ध्यात्वाभिपूरिततनुः दुरितं निहन्यात् ॥

अज्ञान-दुःख-भय-रोग-महाविषाणि
योगोऽयमाशु विनिहन्ति सुखं च दद्यात् ।
उन्माद-विभ्रमहरः हरतश्च सान्द्र-
मानन्दमेव पदमापयति स्म नित्यम् ॥

ध्यात्वैव हस्ततलगं स्वमृतं स्रवन्तं
एवं स यस्य शिरसि स्वकरं निधाय ।
आवर्तयेन्मनुमिमं स च वीतरोगः
पापादपैति मनसा यदि भक्तिनम्रः ॥

धं धन्वन्तरये नमः ॥

धं धन्वन्तरये नमः ॥

धं धन्वन्तरये नमः ॥

दीर्घ-पीवर-दोर्दण्डः, कम्बुग्रीवोऽरुणेक्षणः ।
श्यामलस्तरुणः स्रग्वी सर्वाभरणभूषितः ॥

पीतवासा महोरस्कः, सुमृष्टमणिकुण्डलः ।
नीलकुञ्चितकेशान्तः, सुभगः सिंहविक्रमः ॥
var स्निग्धकुञ्चित Bhagavatam 8.8.34

अमृतस्य पूर्णकलशं बिभ्रद्वलयभूषितः।
स वै भगवतः साक्षाद् विष्णोरंशांशसम्भवः ।
धन्वन्तरिरिति ख्यातः आयुर्वेददृगित्यभाक् ।
एवं धन्वन्तरिं ध्यायेत् साधकोऽभीष्टसिद्धये ॥

ॐ नमो भगवते धन्वन्तरये अमृतकलशहस्ताय,
सर्वामयविनाशनाय, त्रैलोक्यनाथाय श्रीमहाविष्णवे नमः ॥

धन्वन्तरिङ्गरुचिधन्वन्तरेरितरुधन्वंस्तरीभवसुधा
धान्वन्तरावसथमन्वन्तराधिकृतधन्वन्तरौषधनिधे ।
धन्वन्तरंगशुगुधन्वन्तमायिषु वितन्वन् ममाब्धितनय
सून्वन्ततात्मकृततन्वन्तरावयवतन्वन्तरार्तिजलधौ ॥

धन्वन्तरिश्च भगवान् स्वयमास देवो var स्वयेमेव कीर्तिः
नाम्ना नृणां पुरुरुजां रुज आशु हन्ति ।
यज्ञे च भागममृतायुरवाप चार्धा var रवावरुन्ध
आयुष्यवेदमनुशास्त्यवतीर्य लोके ॥

Bhagavatam 2.7.21

क्षीरोदमथनोद्भूतं दिव्यगन्धानुलेपिनम् ।
सुधाकलशहस्तं तं वन्दे धन्वन्तरिं हरिम् ॥

शरीरे जर्जरीभूते व्याधिग्रस्ते कलेवरे ।
औषधं जाह्नवीतोयं वैद्यो नारायणो हरिः ॥

अयं मे हस्तो भगवान् अयं मे भगवत्तरः ।
अयं मे विश्वभेषजोऽयं शिवाभिमर्षणः ॥

अच्युतानन्त-गोविन्द-विष्णो नारायणामृत ।
रोगान्मे नाशयाशेषान् आशु धन्वन्तरे हरे ॥

धं धन्वन्तरये नमः ॥

धं धन्वन्तरये नमः ॥

धं धन्वन्तरये नमः ॥

ॐ नमो भगवते धन्वन्तरये अमृतकलशहस्ताय,
सर्वामयविनाशनाय, त्रैलोक्यनाथाय श्रीमहाविष्णवे नमः ॥

इति धन्वन्तरिस्तोत्रं सम्पूर्णम् ।

॥ धन्वन्तरिस्तोत्रम् ॥

ॐ नमो भगवते धन्वन्तरये अमृतकलशहस्ताय,
सर्वामयविनाशनाय, त्रैलोक्यनाथाय श्रीमहाविष्णवे नमः ॥

चन्द्रौघकान्तिममृतोरुकरैर्जगन्ति
सञ्जीवयन्तममितात्मसुखं परेशम् ।
ज्ञानं सुधाकलशमेव च सन्दधानं
शीतांशुमण्डलगतं स्मरतात्मसंस्थम् ॥

मूर्ध्नि स्थितादमुत एव सुधां स्रवन्तीं
भ्रूमध्यगाच्च तत एव च तानुसंस्थात् ।
हार्दाच्च नाभिसदनादधरस्थिताच्च
ध्यात्वाभिपूरिततनुः दुरितं निहन्यात् ॥

अज्ञान-दुःख-भय-रोग-महाविषाणि
योगोऽयमाशु विनिहन्ति सुखं च दद्यात् ।
उन्माद-विभ्रमहरः हरतश्च सान्द्र-
मानन्दमेव पदमापयति स्म नित्यम् ॥

ध्यात्वैव हस्ततलगं स्वमृतं स्रवन्तं
एवं स यस्य शिरसि स्वकरं निधाय ।
आवर्तयेन्मनुमिमं स च वीतरोगः
पापादपैति मनसा यदि भक्तिनम्रः ॥

धं धन्वन्तरये नमः ॥

धं धन्वन्तरये नमः ॥

धं धन्वन्तरये नमः ॥

दीर्घ-पीवर-दोर्दण्डः, कम्बुग्रीवोऽरुणेक्षणः ।
श्यामलस्तरुणः स्रग्वी सर्वाभरणभूषितः ॥

पीतवासा महोरस्कः, सुमृष्टमणिकुण्डलः ।
नीलकुञ्चितकेशान्तः, सुभगः सिंहविक्रमः ॥
var स्निग्धकुञ्चित Bhagavatam 8.8.34

अमृतस्य पूर्णकलशं बिभ्रद्वलयभूषितः।
स वै भगवतः साक्षाद् विष्णोरंशांशसम्भवः ।
धन्वन्तरिरिति ख्यातः आयुर्वेददृगित्यभाक् ।
एवं धन्वन्तरिं ध्यायेत् साधकोऽभीष्टसिद्धये ॥

ॐ नमो भगवते धन्वन्तरये अमृतकलशहस्ताय,
सर्वामयविनाशनाय, त्रैलोक्यनाथाय श्रीमहाविष्णवे नमः ॥

धन्वन्तरिङ्गरुचिधन्वन्तरेरितरुधन्वंस्तरीभवसुधा
धान्वन्तरावसथमन्वन्तराधिकृतधन्वन्तरौषधनिधे ।
धन्वन्तरंगशुगुधन्वन्तमायिषु वितन्वन् ममाब्धितनय
सून्वन्ततात्मकृततन्वन्तरावयवतन्वन्तरार्तिजलधौ ॥

धन्वन्तरिश्च भगवान् स्वयमास देवो var स्वयेमेव कीर्तिः
नाम्ना नृणां पुरुरुजां रुज आशु हन्ति ।
यज्ञे च भागममृतायुरवाप चार्धा var रवावरुन्ध
आयुष्यवेदमनुशास्त्यवतीर्य लोके ॥

Bhagavatam 2.7.21

क्षीरोदमथनोद्भूतं दिव्यगन्धानुलेपिनम् ।
सुधाकलशहस्तं तं वन्दे धन्वन्तरिं हरिम् ॥

शरीरे जर्जरीभूते व्याधिग्रस्ते कलेवरे ।
औषधं जाह्नवीतोयं वैद्यो नारायणो हरिः ॥

अयं मे हस्तो भगवान् अयं मे भगवत्तरः ।
अयं मे विश्वभेषजोऽयं शिवाभिमर्षणः ॥

अच्युतानन्त-गोविन्द-विष्णो नारायणामृत ।
रोगान्मे नाशयाशेषान् आशु धन्वन्तरे हरे ॥

धं धन्वन्तरये नमः ॥

धं धन्वन्तरये नमः ॥

धं धन्वन्तरये नमः ॥

ॐ नमो भगवते धन्वन्तरये अमृतकलशहस्ताय,
सर्वामयविनाशनाय, त्रैलोक्यनाथाय श्रीमहाविष्णवे नमः ॥

इति धन्वन्तरिस्तोत्रं सम्पूर्णम् ।